वाग्नेयी समस्ता त्र्यवसाना, या ते घर्मः, क्षत्रस्य बृहती, चतुःस्रक्तिर्महाबृहती, घर्मैतद-नुष्टुबचिक्रदत्परोष्णिग्यावती द्यावापृथिवी दधिघर्मो, मयि त्यत्पंक्तिर्यजमानाशीः, पयसो रेतो गायत्र्यनवसाना, त्विषः संवृग्दधिघर्मोऽनुक्तं घर्मदैवतम् ॥ ७ ॥ [ य० अ० ३८ मं० १–२८ ]

इति० संहितायां अष्टत्रिंशोऽध्यायः ।

स्वाहा प्राणेभ्यो मान्त्रवर्णिक्यो देवता, मनसः काममनुष्टुब् यजमानाशीः श्रीर्देवता, प्रजापतिः संभ्रियमाणो यथाकालं प्रायश्चित्तदेवताः, सविता प्रथमेऽहन्प्रत्यहं क्रमेणोग्रश्च मारुती गायत्री, विमुखाख्यो मन्त्रोऽग्नौ विनियुक्तस्तस्मादाग्निक एवास्य ऋषिः परमेष्ठी प्राजापत्यो वाग्निᳪं हृदयेनाश्वमेधिकानि त्रीणि तत्रत्य एव ऋषिर्लोमभ्यः स्वाहेति

| | | | | | |
|---|---|---|---|---|---|
| | १८ | या ते घर्म दिव्या शुक् | ,, | घर्मः | |
| | १९ | क्षत्रस्य त्वा परस्पाय० | ,, | ,, | बृहती |
| | २० | चतुः स्रक्तिर्नाभिर्ऋतस्य० | ,, | ,, | महाबृहती |
| | २१ | घर्मैतत्ते पुरीषं० | ,, | ,, | अनुष्टुप् |
| | २२ | अचिक्रदद्वृषा हरिर्महान्० | ,, | ,, | परोष्णिक् |
| [ अ. ६।२२] | २३ | सुमित्रिया नऽआपऽओषधयः० | ,, | आपः | |
| [अ.२०।२१] | २४ | उद्वयं तमसस्परि० | ,, प्रस्कण्वः | सूर्यः | अनुष्टुप् |
| [अ.२०।२३] | २५ | एधोऽस्येधिषीमहि० | ,, | समित् | |
| | २६ | यावती द्यावापृथिवी० | ,, | दधिघर्मः(इन्द्रः) | |
| | २७ | मयि त्यदिन्द्रियं बृहत्० | ,, | यजमानाशीः(घर्मः) | पंक्तिः |
| | २८ | पयसो रेतऽआभृतं० | ,, | ,, | गायत्री अनवसाना |
| | | त्विषः संवृक् क्रत्वे दक्षस्य० | ,, | दधिघर्मः | |

अथ० संहितायां ऊनचत्वारिंशोऽध्यायः ।

| | | | | |
|---|---|---|---|---|
| १ | स्वाहा प्राणेभ्यः साधिपति० | दध्यङ्आथर्वण | मान्त्रवर्णिक्यः | |
| २ | दिग्भ्यः स्वाहा चन्द्राय स्वाहा० | ,, | ,, | |
| ३ | वाचे स्वाहा प्राणाय स्वाहा० | ,, | ,, | |
| ४ | मनसः काममाकूतिं० | ,, | यजमानाशीः श्रीः | अनुष्टुप् |
| ५ | प्रजापतिः संभ्रियमाणः० | ,, | प्रायश्चित्तदेवताः ( प्रजापत्यादयः ) | |
| ६ | सविता प्रथमेऽहन्० | ,, | (सवित्रादयः) | |
| ७ | उग्रश्च भीमश्च० | ,, प्रजापतिः साध्याः वा परमेष्ठी प्राजापत्यः वा | मरुतः | गायत्री |
| ८ | अग्निᳪं हृदयेन० | ,, प्रजापतिः | | |
| ९ | उग्रं लोहितेन० | ,, ,, | | |

प्रायश्चित्ताहुतयो द्विचत्वारिंशत् ॥ ८ ॥ [ य० अ० ३९ मं० १–१३ ]

इति० संहितायामेकोनचत्वारिंशोऽध्यायः ।

ईशावास्यमात्मदेवत्य, मानुष्टुभोऽध्याय, अनेजदेकं त्रिष्टुप्, स परि जगती, वायुरनिलं यजुषी, ओ३मिति परमाक्षरस्य योगिनामालम्बभूतस्य परस्य ब्रह्मणः प्रणवाख्यस्यास्थूलादिगुणयुक्तस्य ब्रह्मा ऋषिश्छन्दो गायत्रं, परमात्मा देवता, ब्रह्मारम्भे विरामे च यागहोमादिषु शान्तिपुष्टिकर्मसु चान्येष्वपि काम्यनैमित्तिकादिषु सर्वेषु विनियोगोऽस्य, क्रतो त्रिभिर्यजुर्भिरन्ते यज्ञान्योगी स्मारयत्यग्ने नयान्तनमस्कारोक्तिर्हिरण्मयेनादित्योपासनमो३मिति नामनिर्देशो ब्रह्मणः खं ब्रह्मेत्याकाशरूपमन्ते ब्रह्म ध्यायेत् ॥ ९ ॥ [ य० अ० ४० मं० १–१७ ]

इति यजुर्वेदवाजसनेयिसंहितायां चत्वारिंशोऽध्यायः ॥ ४० ॥

---

| | | | |
|---|---|---|---|
| १० लोमभ्यः स्वाहा० | दध्यङ् आथर्वणः, | प्रजापतिः | |
| ११ आयासाय स्वाहा० | ,, | ,, | |
| १२ तपसे स्वाहा० | ,, | ,, | |
| १३ यमाय स्वाहाऽन्तकाय स्वाहा० | ,, | ,, | |

अथ० चत्वारिंशोऽध्यायः ।

| | | | |
|---|---|---|---|
| १–३ ईशावास्य०॥१॥– असुर्या नाम०॥३॥ | दध्यङ्आथर्वणः | आत्मा | अनुष्टुप् |
| ४ अनेजदेकं मनसो० | ,, | ,, | त्रिष्टुप् |
| ५–७तदेजति०॥५॥— यस्मिन्त्सर्वाणि० ॥७॥ | ,, | ,, | अनुष्टुप् |
| ८ स पर्यगाच्छुक्रमकाय० | ,, | ,, | जगती |
| ९–१४ अन्धं तमः०॥९॥– विद्यां चाविद्यां०॥१४॥ | ,, | ,, | अनुष्टुप् |
| १५ वायुरनिलममृत० | ,, | ,, | |
| १६ ओ३म् | ,, ब्रह्मा | परमात्मा | गायत्री |
| क्रतो स्मर क्लिबे स्मर० | ,, | आत्मा | |
| [ अ. ५।३६ ] १७ अग्ने नय सुपथा रायेऽअस्मान्० | ,, अगस्त्यः | अग्निः | त्रिष्टुप् |
| १८ हिरण्मयेन पात्रेण० | ,, | आत्मा | |
| ॐ खं ब्रह्म । | ,, | ,, | |

इति यजुर्वेद-वाजसनेयि-संहितायां
चत्वारिंशोऽध्यायः समाप्तः ।

अथातश्छन्दोदेवता– गायत्र्या अग्निरुष्णिहः सवितानुष्टुभः सोमो, बृहत्या बृहस्पतिः, पंक्तेर्वरुणस्त्रिष्टुभ इन्द्रो, जगत्या विश्वेदेवा, विराजो मित्रः, स्वराजोऽरुणोऽतिच्छन्दसः प्रजापतिर्विच्छन्दसो वायुर्द्विपदायाः पुरुष, एकपदाया ब्रह्मा, सर्वा ऋच आग्नेय्यः, सर्वाणि यजूꣳषि वायव्यानि, सर्वाणि सामानि सौराणि सर्वाणि ब्राह्मणानि च, स्वाहाकारस्याग्निर्वषट्कारस्य विश्वेदेवाः, कर्मारम्भे मन्त्राणां देवता वेदितव्याः, संन्यस्य मनसि देवतां ततो हविर्हूयते, देवतामविज्ञाय यो जुहोति देवास्तस्य हविर्न जुषन्ते, स्वाध्यायमपि योऽधीते मन्त्रदेवतज्ञः सोऽमुष्मिँल्लोके देवैरपीज्यते––

तस्माच्च देवता वेद्या मन्त्रे मन्त्रे प्रयत्नतः ।
मन्त्राणां देवताज्ञानान्मन्त्रार्थमधिगच्छति ॥

मन्त्रार्थज्ञानात्तु विधूतपाप्मा नाकमभ्येति ।

नहि कश्चिदविज्ञाय याथातथ्येन देवताः ।
श्रौतानां कर्मणां विप्रः स्मार्तानां चाश्नुते फलम् ॥ १० ॥

अनादिष्टमध्वरादौ सवान्तकर्मणि परिभाषितं मन्त्रगणं वक्ष्यामः-सर्वमाग्नेयं गायत्रं गौतमीयꣳ, सर्वꣳ सावित्रमौष्णिहं भारद्वाजीयꣳ, सर्वꣳ सौम्यमानुष्टुभमाथर्वणिकꣳ, सर्वं बार्हस्पत्यं बार्हतमाङ्गिरसꣳ, सर्वं वारुणं पांक्तमालम्बायनीयꣳ, सर्वमैन्द्रं त्रैष्टुभं याज्ञवल्कीयꣳ, सर्वमादित्यदेवतं जागतं कौत्सम् ॥ ११ ॥

ज्योतिष्टोमे दीक्षाप्रभृति वक्ष्यामो, दीक्षायां भृगुरग्नाविष्णू गायत्री, प्रायणीय आङ्गिरसोऽदितिरुष्णिक्,क्रये विश्वामित्रः सोमोऽनुष्टुबातिथ्ये वसिष्ठो विष्णुर्बृहती,प्रवर्ग्ये कश्यप आदित्यः पंक्तिरुपसत्स्वात्रेय उपसद्देवता त्रिष्टुबग्नीषोमीयेऽगस्त्योऽग्नीषोमौ जगती, प्रायणीयेऽतिरात्र आग्निवेश्योऽहोरात्रे अतिजगती, चतुर्विंꣳशत्यहे सौकरायणः संवत्सरः शक्वर्यभिप्लवे षडहे सौपर्णोऽर्द्धमासा मासाश्चातिशक्वरी, पृष्ठ्ये षडहे सायकायन ऋतवोऽष्टिरभिजिति प्रियव्रतोऽग्निरत्यष्टिः, स्वरसामसु सरस्वत्यापो धृतिर्विषुवति रौहिणायन आदित्योऽतिधृतिर्विश्वजिति सौभर इन्द्रः कृतिर्गो आयुषो बाष्कलिर्मित्रावरुणौ प्रकृतिर्दशरात्र आचार्यो विश्वेदेवा आकृतिर्द्वादशरात्रिके पृष्ठ्ये षडहे भाल्लवेयो दिशो विकृतिश्छन्दोमेषु शौल्वायन इमे लोकाः संकृतिर्दशमेऽहनि पराशरः संवत्सरोऽभिकृतिर्महाव्रते शैलिनः प्रजापतिरुत्कृतिरुदयनीयेऽतिरात्रे भौवायनो वायुश्छन्दाꣳसि सर्वाणि ॥१२॥

ऋषिभिरुपलक्षितं वाक्यं, ऋषयश्छन्दोभिरुपलक्षिताः, देवता मन्त्रवर्णादृग्यजुषोर्विनियोगतश्च विज्ञेयाः, सर्वमेतच्छन्दोदैवतमार्षं च विज्ञाय यत्किञ्चिज्जपहोमादि करोति तस्य फलमश्नुते, ब्रह्मयज्ञारंभे यथाविधि स्नात्वा छन्दःपुरुषमेनोनिर्णोदनꣳ शरीरे न्यसेत्तिर्यग्बिलश्चमस ऊर्ध्वबुध्नस्तस्याक्षिणी गोतमभरद्वाजौ, श्रोत्रे विश्वामित्रजमदग्नी, नासिके वसिष्ठकश्यपौ, वागत्रिर्गायत्रीं छन्दाग्निदेवताꣳ शिरसि विन्यसेदेवमेवोष्णिहꣳ सवितारं ग्रीवास्वनूके बृहतीं बृहस्पतिं, बाह्वोर्बृहद्रथन्तरे द्यावापृथिवी, मध्ये त्रिष्टुभमिन्द्रꣳ, श्रोण्योर्जगतीमादित्यं, मेढ्रेऽतिच्छन्दसं प्रजापतिं, पायौ यज्ञायज्ञियं वैश्वानरमूर्वोरनुष्टुभं विश्वान्देवानष्ठीवतोः पंक्तिं मरुतः, पादयोर्द्विपदां विष्णुं, प्राणेषु विच्छन्दसं वायुं, न्यूनातिरिक्तेष्वङ्गेषु न्यूनाक्षरं छन्द आपो देवतेत्येवꣳ सर्वाङ्गेषु योजयित्वा वेदमयः सम्पद्यते, तथा शापानुग्रहसमर्थो भवति, ब्राह्मं तेजश्च वर्धते, न कुतश्चिद्भयं विन्दते, ऋङ्मयो यजुर्मयः साममयस्तेजोमयो ब्रह्ममयोऽमृतमयः संभूय ब्रह्मैवाभ्येति तस्मादेतन्नाब्रह्मचारिणे नातपस्विने नासंवत्सरोषिताय, नाप्रवक्त्रेऽनुब्रूयादनेनाधीतेन चान्द्रायणाब्दफलमवाप्नोत्यनेन च सम्यग्ज्ञातेन ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोत्याप्नोति ॥ १३ ॥

इति सर्वानुक्रमसूत्रे चतुर्थोऽध्यायः ।

---

## अथ सर्वानुक्रमसूत्रे पञ्चमोऽध्यायः ।

अथ छन्दाꣳसि—गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यतिजगती शक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतयः कृतिप्रकृत्याकृतिविकृतिसंकृत्यभिकृत्युत्कृतयश्चतुर्विंꣳशत्यक्षरादीनि चतुरुत्तराण्यूनाधिकेनैकेन निचृद्भुरिजौ, द्वाभ्यां विराट्स्वराजौ, पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान्व्यूहेदाद्ये तु सप्तवर्गे पादविशेषात्संज्ञाविशेषस्ताननुक्रामन्त एवोदाहरिष्यामो, विराड्रूपा विराट्स्थानाश्च बहूना अपि त्रिष्टुभ एवेत्युद्देशस्तत्र दशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभजागता इति संज्ञा, अनादेशेऽष्टाक्षराः पादाश्चतुष्पदाश्चर्चः॥१॥

प्रथमं छन्दस्त्रिपदा गायत्री, पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपंक्तिः, षट्सप्तैकादशा उष्णिग्गर्भा, त्रयः सप्तकाः पादनिचृन्मध्यमः षट्कश्चेदतिनिचृद्दशकश्चेद्यवमध्या, यस्यास्तु षट्कसप्तकाष्टकाः सा वर्धमाना, विपरीता प्रतिष्ठा, द्वौ षट्कौ सप्तकश्चेति ह्रसीयसी ॥ २ ॥

द्वितीयमुष्णिक् त्रिपदान्त्यो द्वादशक, आद्यश्चेत्पुर उष्णिङ्मध्यमश्चेत् ककुप्त्रैष्टुभजागतचतुष्काः ककुम्न्यंकुशिरैकादशिनोः परः षट्कस्तनुशिरा, मध्ये चेत्पिपीलिकमध्याद्यः पञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा, चतुःसप्तकोष्णिगेव ॥ ३ ॥

तृतीयमनुष्टुप् चतुष्पदाथ पञ्चपञ्चकाः षट्कश्चैको महापदपंक्तिर्जागतावष्टकश्च कृतिर्मध्ये चेदष्टकः पिपीलकमध्या, नवकयोर्मध्ये जागतः काविराण्नव वैराजत्रयोदशैर्नष्टरूपादेकास्त्रयो विराडेकादशका वा ॥ ४ ॥

चतुर्थं बृहती, तृतीयो द्वादशक, आद्यश्चेत्पुरस्ताद्बृहती, द्वितीयश्चेन्न्यंकुसारिण्युरो बृहती स्कन्धोग्रीवी वान्त्यश्चेदुपरिष्टाद्बृहत्यष्टिनोर्मध्ये दशकौ विष्टारबृहती, त्रिजागतोर्ध्वबृहती, त्रयोदशिनोर्मध्येऽष्टकः पिपीलकमध्या, नवकाष्टकैकादशाष्टिनो विषमपदा, चतुर्नवका बृहत्येव ॥ ५ ॥

पञ्चमं पंक्तिः पञ्चपदाथ चतुष्पदा विराड्दशका, अयुजौ जागतौ सतोबृहती, युजौ चेद्विपरीताद्यौ चेत्प्रस्तारपंक्तिरन्त्यौ चेदास्तारपंक्तिराद्यन्त्यौ चेत्संस्तारपंक्तिर्मध्यमौ चेद्विष्टारपंक्तिः ॥ ६ ॥

षष्ठं त्रिष्टुप् त्रैष्टुभपदा, द्वौ तु जागतौ यस्याः सा जागते जगती, त्रैष्टुभे त्रिष्टुब्वैराजौ जागतौ चाभिसारिणी, नवकौ वैराजस्त्रैष्टुभश्च द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थानैकादशिनस्त्रयोऽष्टकश्च विराड्रूपा, द्वादशिनस्त्रयोष्टकश्च ज्योतिष्मती, यतोऽष्टकस्ततो ज्योतिश्चत्वारोऽष्टका जागतश्च महाबृहती, मध्ये जागतश्चेद्यवमध्याद्यौ दशकावष्टकास्त्रयः पंक्त्युत्तरा विराट्पूर्वा वा ॥ ७ ॥

सप्तमं जगती जागतपदाष्टिनस्त्रयः स्वौ च द्वौ महासतोबृहत्यष्टकौ सप्तकः षट्को दशको नवकश्च षडष्टका वा महापंक्तिः॥ माध्यन्दिनीये वाजसनेयके सर्वानुक्रमणिकैषा कृतिर्भगवतः कात्यायनस्यैषा कृतिर्भगवतः कात्यायनस्य ॥ ८ ॥

इति सर्वानुक्रमसूत्रे पञ्चमोऽध्यायः ।

इति यजुर्वेद-वाजसनेयि-संहितायाः सर्वानुक्रमसूत्रं समाप्तम् ।

# अथानुवाकसूत्राध्यायः ।

अथानुवाकान्वक्ष्यामि ब्रह्मणा निर्मितान्पुरा । शिष्याणामुपदेशाय यज्ञसंस्कार एव च । विप्राणां यज्ञकालेषु जपहोमार्चनादिषु ॥ १ ॥

इषे त्वैका(१) वसोः पवित्रं तिस्रो (२–४)ऽग्ने व्रतपते सप्त (५–११) पवित्रे स्थो द्वे (१२–१३) शर्मासि तिस्रो(१४–१६)धृष्टिरसि शर्मासि द्विकौ (१७–१८;१९–२०)देवस्य त्वा तिस्रो (२१-२३) देवस्य त्वा पञ्च (२४–२८) प्रत्युष्टꣳरक्षस्तिस्रो (२९–३१) दशैकत्रिꣳशत् ॥ १० ॥ ३१ ॥ १ ॥

कृष्णोऽसि षड्(१–६)अग्नेवाजजित्तिस्रो(७-९) मयीदमग्नीषोमयोः पञ्चकौ (१०–१४;१५–१९) अग्नेऽदब्धायो चतस्रः (२०–२३) संवर्चसा पञ्च (२४–२८)अग्नये कव्यवाहनाय षट् (२९–३४) सप्त, चतुस्त्रिꣳशत् ॥ ७ ॥ ३४ ॥ २ ॥

समिधाग्निं भूर्भुवः स्वश्चतुष्कौ (१–४;५–८) अग्निर्ज्योतिर्द्वे (९–१०) उपप्रयन्तः षड्विꣳशति-(११–१६) भूर्भुवःस्वश्चतस्रो(३७–४०) गृहा मा तिस्रः (४१–४३) प्रघासिनः पंच (४४–४८) पूर्णा दर्वि द्वे (४९–५०)अक्षन्नमीमदन्त षड् (५१-५६) एष ते सप्त (५७-६३) दश, त्रिषष्टिः ॥ १० ॥ ६३ ॥ ३ ॥

एदं द्वे (१-२) महीनां पयश्चतस्र (३–६) आकूत्या ऋक्सामयोर्द्विकौ (७–८;९-१०) व्रतं कृणुत षड् (११-१६)एषा ते चतस्रो (१७-२०) वस्व्यासि तिस्र (२१-२३) एष ते द्वे (२४-२५) शुक्रं त्वा चतस्रो (२६–२९)ऽदित्यास्त्वगष्टौ (३०-३७)दश, सप्तत्रिꣳशत्॥ १० ॥ ३७ ॥ ४ ॥

अग्नेस्तनूरापतये चतुष्कौ(१-४;५-८)तप्तायनी द्वे(९-१०) इन्द्रघोषस्तिस्रो (११-१३)युञ्जतेऽष्टौ (१४-२१) देवस्य त्वा चतस्रो (२२-२५) देवस्य त्वा पंच (२६-३०) विभूरसि चतस्रो (३१-३४) ज्योतिरसि षड् (३५-४०) उरु विष्णो तिस्रो (४१-४३) दश, त्रिचत्वारिꣳशत् ॥ १० ॥ ४३ ॥ ५ ॥

देवस्य त्वा षड् (१-६) उपावीरसि पंच (७-११) माहिः षट् (१२-१७) सं ते तिस्रः (१८-२०)समुद्रं गच्छ हविष्मतीर्द्विकौ(२१-२२; २३-२४) हृदे त्वा पंच (२५-२९) देवस्य त्वाष्टौ (३०-३७) अष्टौ, सप्तत्रिꣳशत् ॥ ८ ॥ ३७ ॥६ ॥

वाचस्पतय उपयामगृहीतोऽसि त्रिकौ (१-३; ४-६)आवायोऽयं वां द्विकौ(७-८;९-१०)या वामेका (११) तं प्रत्नथा चतस्रो(१२–१५)ऽयं वेनो ये देवासस्त्रिकौ(१६-१८;१९–२१)इन्द्राय मूर्धानं द्विकौ (२२–२३;२४–२५) यस्त एका (२६) प्राणाय तिस्रो (२७–२९) मघव (३०)इन्द्राग्नी आगतमा ग्नौमासश्चर्षणीधृतो(३१;३२;३३)विश्वेदेवास आगतेन्द्रमरुत्वो (३४;३५) मरुत्वन्तं वृषभं (३६) मरुतां त्वौजसे(३६)सजोषा इन्द्र (३७) मरुत्वाँ २ इन्द्र(३८)महाँ२ इन्द्रो (३९) महाँ २ इन्द्रमेकैका(४०)उदुत्यमष्टौ (४१–४८) पंचविꣳशतिरष्टाचत्वारिꣳशत् ॥ २५॥ ४८॥७॥

उपयामगृहीतोऽस्यादित्येभ्यः पंच (१–५) वाममद्य द्वे (६–७) सुशर्मास्येका (८) बृहस्पतिसुतस्य द्वे (९-१०) हरिरसि चतस्रः (११–१४) समिन्द्र णोऽष्टौ (१५–२२) माहिरेजतु दशमास्यः पंचकौ(२३–२७;२८–३२) आतिष्ठ युक्ष्वाहीन्द्रमिदेकैका (३३; ३४; ३५) यस्मान्न द्वे (३६–३७) अग्ने पवस्वोत्तिष्ठन्नदश्रमुदुत्यमेकैकाजिघ्र द्वे (३८;३९;४०;४१;४२–४३) वि न इन्द्र वाचस्पतिं विश्वकर्मन्नेकैकाग्नये त्वा चतस्र (४४;४५;४६;४७–५०) इह रतिस्तिस्रः (५१–५३) परमेष्ठी दश (५४–६३) त्रयोविꣳशतिस्त्रिषष्टिः ॥ २३॥ ६३ ॥ ८ ॥

देवसवितश्चतस्र (१–४) इन्द्रस्य वज्रः पंच

( ५-९ ) देवस्याहं दश ( १०-१९ ) आपये तिस्रो ( २०-२२ ) वाजस्येममष्टौ ( २३-३० ) अग्निरेकाक्षरेणैष ते चतुष्कौ (३१-३४;३५-३८) सविता द्वे (३९-४० ) अष्टौ चत्वारिंशत् ॥ ८ ॥ ४० ॥ ९ ॥

अपो देवाश्चतस्रः ( १-४ ) सोमस्य त्विषिः पंच ( ५-९ )अवेष्टाः सप्त ( १०-१६ )सोमस्य त्वा चतस्र ( १७-२० ) इन्द्रस्य वज्रः पंच ( २१-२५ ) स्योनासि चतस्रः ( २६-२९ ) सवित्रेका (३०) अश्विभ्यां चतस्रः ( ३१-३४ ) अष्टौ, चतुस्त्रिंशत् ॥ ८ ॥ ३४ ॥ १० ॥

युञ्जान एकादश ( १-११ ) प्रतूर्तं षोडश ( १२-२७ ) देवस्य त्वा दश ( २८-३७)आपो देवीर्द्वादश( ३८-४९ )आपो ह्येकादश(५०-६०) अदितिष्ट्वा पंच ( ६१-६५ ) आकूतिमष्टादश ( ६६-८३) सप्त, त्र्यशीतिः ॥ ७ ॥ ८३ ॥ ११ ॥

दृशानः सप्तदश ( १-१७) दिवस्परि द्वादश ( १८-२९ ) समिधाग्निं पंचदश ( ३०-४४ ) अपेत सप्तदश ( ४५-६१ ) असुन्वन्तं त्रयोदश ( ६२-७४ ) या ओषधीः सप्तविंशतिः ( ७५-१०१ ) मा मा षोडश ( १०२-११७ ) सप्त, सप्तदशशतम् ॥ ७ ॥ ११७ ॥ १२ ॥

मयि गृह्णामि पंचदश ( १-१५ ) ध्रुवासि मधुवाता एकादशकौ ( १६—२६;२७—३७ ) सम्यक्स्रवन्ति नव ( ३८-४६ ) इमं मा षड् ( ४७-५२) अपां त्वैका( ५३ ) अयं पुरः पंच (५४-५८) सप्ताष्टापंचाशत् ॥ ७ ॥ ५८ ॥ १३ ॥

ध्रुवक्षितिः षट्( १-६ )सजूर्ऋतुभिर्मूर्धा वयो द्विकौ ( ७-८;९-१० ) इन्द्राग्नी आयुर्मे षट्कौ ( ११-१६;१७-२२ ) आशुस्त्रिवृदेका ( २३ ) अग्नेर्भागोस्येकया चतुष्कौ ( २४-२७;२८-३१ ) अष्टावेकत्रिंशत् ॥ ८ ॥ ३१ ॥ १४ ॥

अग्ने जातान्पंच ( १-५ ) रश्मिना सत्याय चतस्रो ( ६-९) राज्यस्ययं पुरः पंचकौ ( १०-१४;१५-१९ ) अग्निर्मूर्धैकोनत्रिंशद् ( २०-४८ ) येन ऋषयोऽष्टौ( ४९-५६ ) तपश्च नव ( ५७-६५ ) सप्त, पंचषष्टिः ॥ ७ ॥ ६५ ॥ ॥ १५ ॥

नमस्ते षोडश ( १-१६ ) हिरण्यबाहव ( १७-२१ ) उष्णीषिणे ( २२-२६ ) तक्षभ्यो ( २७-३१ ) ज्येष्ठाय पंचकाः ( ३२-३६ ) सुत्याय चतस्रः ( ३७-४० ) शंभवायैका (४१) पार्याय पंच( ४२-४६ ) द्रापे अन्धसो विंशतिः( ४७-६६ ) नव, षट्षष्टिः ॥ ९ ॥६६॥१६॥

अश्मन्नूर्जं दश ( १-१० ) नमस्ते पंच (११-१५) अग्निस्तिग्मेन नव (१६-२४) चक्षुषः पिताष्टौ ( २५-३२ ) आशुः शिशानः सप्तदश ( ३३-४९ ) उदेनं क्रमध्वमग्निना पंचदशकौ (५०-६४;६५-७९) शुक्रज्योतिः सप्त(८०-८६) इमंस्तनं त्रयोदश ( ८७-९९ ) नवैकोनशतम् ॥ ९ ॥ ९९ ॥ १७ ॥

वाजः सप्त (१-७)शमूर्क्चतुष्का(८;९-१२) अश्माग्निस्त्रिकौ ( १३-१५;१६-१८ ) अंशुः पंच ( १९-२३ ) एका चतस्रो ( २४-२७ ) वाजाय द्वे ( २८-२९ )वाजस्य त्वष्टौ (३०-३७) ऋताषाड् त्रयोदश ( ३८-५० ) अग्निं युनज्मि सप्त ( ५१-५७ ) यदाकूताद्वात्रहत्याय दशकौ ( ५८-६७;६८-७७ ) त्रयोदश, सप्तसप्ततिः ॥ १३ ॥ ७७ ॥ १८ ॥

स्वाद्वीं त्वैकादश ( १-११ ) देवा यज्ञं विंशतिः ( १२-३१ ) सुरावन्तं सप्तदश ( ३२-४८ ) उदीरतां त्रयोदश ( ४९-६१ ) आच्याजानुर्दश ( ६२—७१ ) सोमो राजाष्टौ ( ७२-७९ ) सीसेन तन्त्रं षोडष ( ८०-९५) सप्त, पंचनवतिः ॥ ७ ॥ ९५ ॥ १९ ॥

क्षत्रस्य योनिस्त्रयोदश ( १-१३ ) यद्देवा दश( १४-२३ )अभ्यादधाम्यष्टौ (२४-३१) यो भूतानां चतस्रः ( ३२-३५ ) समिद्ध इन्द्र एका-

दश ( ३६-४६ ) आ यात्वष्टौ ( ४७-५४ ) समिद्धो अग्निर्द्वादश ( ५५-६६ ) अश्विना हविस्त्रयोदश ( ६७—७९ ) अश्विना तेजसैकादश ( ८०-९० ) नव, नवतिः ॥ ९ ॥ ९० ॥ २० ॥

इमं मे समिद्धो अग्निरेकादशकौ ( १-११; १२-२२ ) वसन्तेन ऋतुना षड् ( २३-२८ ) होता यक्षत्समिधाग्निं द्वादश( २९-४० ) अश्विनौ छागस्य सप्त ( ४१-४७ ) देवं बर्हिश्चतुर्दश ( ४८-६१ ) षडेकषष्टिः ॥ ६ ॥ ६१ ॥ २१ ॥

तेजोऽसि पंच ( १-५ ) अग्नय एका ( ६ ) हिंकाराय द्वे ( ७-८ ) तत्सवितुर्दश ( ९-१८ ) विभूर्मात्रैका ( १९ ) काय द्वे ( २०-२१ ) आब्रह्मँस्त्रयोदश शेषादेका ( २२;२३;२४;२५; २६;२७;२८;२९;३०;३१;३२;३३;३४ ) एकोनविꣳशतिः, चतुस्त्रिꣳशत् ॥ १९ ॥ ३४ ॥ २२ ॥

हिरण्यगर्भो, यः प्राणतो द्विकौ ( १-२;३-४) युञ्जन्त्यष्टौ (५-१२) वायुष्ट्वा पंच ( १३-१७ ) प्राणाय तिस्र ( १८-२० ) उत्सक्थ्या द्वादश ( २१-३२ ) गायत्री, कस्त्वा षट्कौ ( ३३-३८; ३९-४४ ) कःस्विदष्टौ ( ४५-५२ ) कास्विद्दश ( ५३-६२ ) सुभूः स्वयंभूस्तिस्र ( ६३-६५ ) एकादश, पञ्चषष्टिः ॥ ११ ॥ ६५ ॥ २३ ॥

अश्वस्तूपरो ( १—१० ) धूम्रान्वसन्ताय ( ११-२० ) समुद्राय शिशुमारान् ( २१-३० ) मयुः प्राजापत्यो दशकाः ( ३१-४० ) चत्वारश्चत्वारिꣳशत् ॥ ४ ॥ ४० ॥ २४ ॥

शादं दद्भिर्नवैकैका ( १;२;३;४;५;६;७;८;९) हिरण्यगर्भश्चतस्र ( १०—१३ ) आ नो दश ( १४—२३ ) मा नो मित्रो, यदश्वस्याष्टकौ ( २४-३१;३२-३९ ) यत्ते षड् (४०-४५) इमा नु कं द्वे ( ४६-४७) पंचदश,सप्तचत्वारिꣳशत् ॥ १५ ॥ ४७ ॥ २५ ॥

अग्निश्च पंचदश ( १-१५ ) उशा त एकादश ( १६-२६ ) द्वौ, षड्विꣳशतिः ॥२॥२६॥२६॥

समास्त्वा दश ( १-१० ) ऊर्ध्वा अस्य पीवो अन्ना द्वादशकौ ( ११-२२;२३-३४ ) अभि त्वैकादश ( ३५-४५ ) चत्वारः, पंचचत्वारिꣳशत् ॥ ४ ॥ ४५ ॥ २७ ॥

होता यक्षदेकादश ( १-११ ) देवं बर्हिर्द्वादश ( १२-२३ ) पुनरप्येवं ( २४-३४;३५-४६ ) चत्वारः, षट्चत्वारिꣳशत् ॥ ४ ॥ ४६ ॥ २८ ॥

समिद्धो अअग्नेकादश ( १-११ ) यदक्रन्दस्त्रयोदश ( १२-२४ ) समिद्धो अद्य द्वादश (२५-३६) केतुं कृण्वँश्चतुर्विꣳशतिः (३७-६०) चत्वारः, षष्टिः ॥ ४ ॥ ६० ॥ २९ ॥

देवसवितः षट् ( १-६ ) तपसे कौलालꣳ षोडष ( ७-२२ ) द्वौ; द्वाविꣳशतिः ॥ २ ॥ ॥ २२ ॥ ३० ॥

सहस्रशीर्षा षोडष (१-१६ ) अद्भ्यः संभृतः षट् ( १७-२२ ) द्वौ; द्वाविꣳशतिः ॥ २ ॥ ॥ २२ ॥ ३१ ॥

तदेव सप्त ( १-७ ) वेनस्तन्नव ( ८-१६ ) द्वौ, षोडष ॥ २ ॥ १६ ॥ ३२ ॥

अस्याजरासः सप्तदश ( १-१७ ) आपश्चिद् द्वादश (१८-२९ ) विभ्राट् चतुर्दश (३०-४३) प्रवावृज एकादश ( ४४-५४ ) प्रवायुप्रवीरया पंचदशकौ ( ५५-६९;७०-८४ ) आ नस्त्रयोदश ( ८५-९७ ) सप्त, सप्तनवतिः ॥७॥९७॥३३॥

यज्जाग्रतः ( १-१० ) पंच नद्यः ( ११-२० ) सोमो धेनुमाकृष्णेन (२१-३०;३१-४० )पूषन्तव दशका ( ४१-५० ) न तदष्टौ ( ५१-५८ ) षडष्टापंचाशत् ॥ ६ ॥ ५८ ॥ ३४ ॥

अपेतो दश ( १-१० ) अपाघं द्वादश (११-२२) द्वौ, द्वाविꣳशतिः ॥ २ ॥ २२ ॥३५॥

ऋचं वाचꣳषोडश (१-१६) द्यौः शान्तिरष्टौ ( १७-२४ ) द्वौ, चतुर्विꣳशतिः ॥२॥२४॥३६॥

देवस्य त्वा दश ( १-१० ) यमायत्वैकादश ( ११-२१ ) द्वावेकविंशतिः ॥ २ ॥२१॥३७॥

देवस्य त्वाष्टौ (१-८) यमाय त्वा क्षत्रस्य त्वा दशकौ ( ९-१८;१९-२८ ) त्रयोऽष्टाविंशतिः ॥ ३ ॥ २८ ॥ ३८ ॥

स्वाहा प्राणेभ्यः षड् ( १-६ ) उग्रश्च सप्त ( ७-१३ ) द्वौ त्रयोदश ॥ २ ॥ १३ ॥ ३९ ॥

ईशावास्यमष्टौ ( १-८ ) अन्धं तमो नव ( ९-१७ ) द्वौ, सप्तदश ॥ २ ॥ १७ ॥ ४० ॥

दशाध्याये समाख्याता अनुवाकास्तु संख्यया ।
शतं दशानुवाकाश्च नवान्ये च मनीषिभिः ॥ १ ॥
सप्तषष्टिश्चितौ ज्ञेया सौत्रे द्वाविंशतिस्तथा ।
अश्व एकोनपंचाशत्पञ्चत्रिंशत्खिले स्मृताः ॥ २ ॥
शुक्रियेषु तु विज्ञेया एकादश मनीषिभिः ।
एकीकृत्य समाख्यातं त्रिशतं त्र्यधिकं मतम् ॥ ३ ॥

इत्यनुवाकसूत्राध्यायः संपूर्णः ॥

---

# छन्दांसि ।

## [ सर्वानुक्रमसूत्रं । अ० ५, अनु० १ ]

| छन्दोनामानि | अक्षराणि | छन्दोनामानि | अक्षराणि | छन्दोनामानि | अक्षराणि |
|---|---|---|---|---|---|
| **१ गायत्री ।** | **२४** | ३ भुरिगनुष्टुप् | ३३ | २ निचृ(वृ)त्त्रिष्टुप् | ४३ |
| १ विराड् गायत्री | २२ | ४ स्वरानुष्टुप् | ३४ | ३ भुरिक् त्रिष्टुप् | ४५ |
| २ निचृ(वृ)द्गायत्री | २३ | **४ बृहती ।** | **३६** | ४ स्वराट् त्रिष्टुप् | ४६ |
| ३ भुरिग्गायत्री | २५ | १ विराड् बृहती | ३४ | **७ जगती ।** | **४८** |
| ४ स्वराड् गायत्री | २६ | ४ निचृ(वृ)द्बृहती | ३५ | १ विराड् जगती | ४६ |
| **२ उष्णिक् ।** | **२८** | ३ भुरिग्बृहती | ३७ | २ निचृ(वृ)ज्जगती | ४७ |
| १ विराडुष्णिक् | २६ | ४ स्वराड्बृहती | ३८ | ३ भुरिग्जगती | ४९ |
| २ निचृ(वृ)दुष्णिक् | २७ | **५ पंक्तिः ।** | **४०** | ४ स्वराड्जगती | ५० |
| ३ भुरिगुष्णिक् | २९ | १ विराट्पंक्तिः | ३८ | **८ अतिजगती ।** | **५२** |
| ४ स्वराडुष्णिक् | ३० | २ निचृ(वृ)त्पंक्तिः | ३९ | १ विराडतिजगती | ५० |
| **३ अनुष्टुप् ।** | **३२** | ३ भुरिक्पंक्तिः | ४१ | २ निचृ(वृ)दतिजगती | ५१ |
| १ विराडनुष्टुप् | ३० | ४ स्वराट् पंक्तिः | ४२ | ३ भुरिगतिजगती | ५३ |
| २ निचृ(वृ)दनुष्टुप् | ३१ | **६ त्रिष्टुप् ।** | **४४** | ४ स्वराडतिजगती | ५४ |
| | | १ विराट्त्रिष्टुप् | ४२ | | |

| छन्दोनामानि | अक्षराणि |
|---|---|
| **९ शक्वरी ।** | **५६** |
| १ विराट् शक्वरी | ५४ |
| २ निचृ(वृ)च्छक्वरी | ५५ |
| ३ भुरिक्शक्वरी | ५७ |
| ४ स्वराट् शक्वरी | ५८ |
| **१० अतिशक्वरी ।** | **६०** |
| १ विराडतिशक्वरी | ५८ |
| २ निचृ(वृ)दतिशक्वरी | ५९ |
| ३ भुरिगतिशक्वरी | ६१ |
| ४ स्वराडतिशक्वरी | ६२ |
| **११ अष्टिः ।** | **६४** |
| १ विराडष्टिः | ६२ |
| २ निचृ(वृ)दष्टिः | ६३ |
| ३ भुरिगष्टिः | ६५ |
| ४ स्वराडष्टिः | ६६ |
| **१२ अत्यष्टिः ।** | **६८** |
| १ विराडत्यष्टिः | ६६ |
| २ निचृ(वृ)दत्यष्टिः | ६७ |
| ३ भुरिगत्यष्टिः | ६९ |
| ४ स्वराडत्यष्टिः | ७० |
| **१३ धृतिः ।** | **७२** |
| १ विराड्धृतिः | ७० |
| २ निचृ(वृ)द्धृतिः | ७१ |
| ३ भुरिग्धृतिः | ७३ |
| ४ स्वराड्धृतिः | ७४ |
| **१४ अतिधृतिः ।** | **७६** |
| १ विराडतिधृतिः | ७४ |
| २ निचृ(वृ)दतिधृतिः | ७५ |
| ३ भुरिगतिधृतिः | ७७ |
| ४ स्वराडतिधृतिः | ७८ |
| **१५ कृतिः ।** | **८०** |
| १ विराट्कृतिः | ७८ |
| २ निचृ(वृ)त्कृतिः | ७९ |
| ३ भुरिक्कृतिः | ८१ |
| ४ स्वराट्कृतिः | ८२ |
| **१६ प्रकृतिः ।** | **८४** |
| १ विराट्प्रकृतिः | ८२ |
| २ निचृ(वृ)त्प्रकृतिः | ८३ |
| ३ भुरिक्प्रकृतिः | ८५ |
| ४ स्वराट् प्रकृतिः | ८६ |
| **१७ आकृतिः ।** | **८८** |
| १ विराडाकृतिः | ८६ |
| २ निचृ(वृ)दाकृतिः | ८७ |
| ३ भुरिगाकृतिः | ८९ |
| ४ स्वराडाकृतिः | ९० |
| **१८ विकृतिः ।** | **९२** |
| १ विराड्विकृतिः | ९० |
| २ निचृ(वृ)द्विकृतिः | ९१ |
| ३ भुरिग्विकृतिः | ९३ |
| ४ स्वराड्विकृतिः | ९४ |
| **१९ संकृतिः ।** | **९६** |
| १ विराट्संकृतिः | ९४ |
| २ निचृ(वृ)त्संकृतिः | ९५ |
| ३ भुरिक्संकृतिः | ९७ |
| ४ स्वराट्संकृतिः | ९८ |
| **२० अभिकृतिः ।** | **१००** |
| १ विराडभिकृतिः | ९८ |
| २ निचृ(वृ)दभिकृतिः | ९९ |
| ३ भुरिगभिकृतिः | १०१ |
| ४ स्वराडभिकृतिः | १०२ |
| **२१ उत्कृतिः ।** | **१०४** |
| १ विराडुत्कृतिः | १०२ |
| २ निचृ(वृ)दुत्कृतिः | १०३ |
| ३ भुरिगुत्कृतिः | १०५ |
| ४ स्वराडुत्कृतिः | १०६ |

## छन्दसां देवताः ।

### ( सर्वानु. अ. ४ अ. १० )

| छन्दः | देवता | छन्दः | दवता |
|---|---|---|---|
| गायत्री | अग्निः | विच्छन्दाः | वायुः |
| उष्णिक् | सविता | द्विपदा | पुरुषः |
| अनुष्टुप् | सोमः | एकपदा | ब्रह्मा |
| बृहती | बृहस्पतिः | सर्वा ऋचः | अग्निः |
| पंक्तिः | वरुणः | सर्वाणि यजूंषि | वायुः |
| त्रिष्टुप् | इन्द्रः | सर्वाणि सामाणि | सूर्यः |
| जगती | विश्वेदेवाः | सर्वाणि ब्राह्मणाणि | ,, |
| विराट् | मित्रः | स्वाहाकारः | अग्निः |
| स्वराट् | अरुणः | बषट्कारः | विश्वेदेवाः |
| अतिच्छन्दाः | प्रजापतिः | | |

## अनादिष्टा देवतादयः ।

### ( सर्वानु. अ. ४ अनु. ११ )

| देवता | छन्दः | ऋषिः | देवता | छन्दः | ऋषिः |
|---|---|---|---|---|---|
| अग्निः | गायत्री | गोतमः | वरुणः | पंक्तिः | आलम्बायनः |
| सविता | उष्णिक् | भरद्वाजः | इन्द्रः | त्रिष्टुप् | याज्ञवल्क्यः |
| सोमः | अनुष्टुप् | अथर्वा | आदित्यः | जगती | कुत्सः |
| बृहस्पतिः | बृहती | अङ्गिराः | | | |

## ज्योतिष्टोमे दीक्षादीनां ऋष्यादयः (सर्वा.अ.४अनु.१२)

| | ऋषिः | देवता | छन्दः |
|---|---|---|---|
| दीक्षा | भृगुः | अग्नाविष्णू | गायत्री |
| प्रायणीयः | आङ्गिरसः | अदितिः | उष्णिक् |
| क्रयः | विश्वामित्रः | सोमः | अनुष्टुप् |
| आतिथ्यम् | वसिष्ठः | विष्णुः | बृहती |
| प्रवर्ग्यः | कश्यपः | आदित्यः | पंक्तिः |
| उपसदः | आत्रेयः | उपसद् | त्रिष्टुप् |
| अग्नीषोमीयम् | अगस्त्यः | अग्नीषोमौ | जगती |
| प्रायणीयोऽतिरात्रः | आग्निवेश्यः | अहोरात्रे | अतिजगती |
| चतुर्विंशत्यहः | सौकरायणः | संवत्सरः | शक्करी |
| अभिप्लवः षडहः | सौपर्णः (सावर्णः) | अर्धमासाः मासाश्च | अतिशक्करी |
| पृष्ठ्यः षडहः | सायकायनः | ऋतवः | अष्टिः |
| अभिजित् | प्रियव्रतः | अग्निः | अत्यष्टिः |
| स्वरसामानि | सरस्वती | आपः | धृतिः |
| विषुवान् | रौहिणायनः | आदित्यः | अतिधृतिः |
| विश्वजित् | सौभरः | इन्द्रः | कृतिः |
| गो आयुः | बाष्कलिः (वार्कलिः) | मित्रावरुणौ | प्रकृतिः |
| दशरात्रः [शाहः | आचार्यः | विश्वेदेवाः | आकृतिः |
| पृष्ठ्यःषडहः द्वाद- | भाल्लवेयः | दिशः | विकृतिः |
| छन्दोमाः | शौल्वायनः | इमेलोकाः | संकृतिः |
| दशममहः | पराशरः | संवत्सरः | अभिकृतिः |
| महाव्रतम् | शैलिनः | प्रजापतिः | उत्कृतिः |
| उदयनीयोऽतिरात्रः | भौवायनः | वायुः | छन्दांसि सर्वाणि |

## छन्दःपुरुषस्य

### शरीरे न्यासप्रकारः

(सर्वानु. अ. ४ अनु. १३)

| अवयवाः | ऋषयः | देवताः | छन्दः |
|---|---|---|---|
| अक्षिणी | गोतमभरद्वाजौ | | |
| श्रोत्रे | विश्वामित्रजमदग्नी | | |
| नासिके | वसिष्ठकश्यपौ | | |
| वाक् | अत्रिः | | |
| शिरः | | अग्निः | गायत्री |
| ग्रीवाः | | सविता | उष्णिक् |
| अनूकम् | | बृहस्पतिः | बृहती |
| बाहू | | द्यावापृथिवी | बृहद्रथन्तरे |
| मध्यम् | | इन्द्रः | त्रिष्टुप् |
| श्रोण्यौ | | आदित्यः | जगती |
| मेढ्रं | | प्रजापतिः | अतिच्छन्दाः |
| पायुः | | वैश्वानरः | यज्ञायज्ञियं |
| ऊरू | | विश्वेदेवाः | अनुष्टुप् |
| अष्ठीवन्तौ | | मरुतः | पंक्तिः |
| पादौ | | विष्णुः | द्विपदा |
| प्राणाः | | वायुः | विच्छन्दाः |
| इतोऽन्येऽवयवाः | | आपः | न्यूनाक्षरंछन्दः |

## छन्दांसि ।

### १ गायत्री

(सर्वानु. अ. ५ अनु. २)

| छन्दोनामानि | प्रथमः पादः | द्वितीयः पादः | तृतीयः पादः | चतुर्थः पादः | पंचमः पादः | संपूर्णान्यक्षराणि |
|---|---|---|---|---|---|---|
| गायत्री | ८ | ८ | ८ | | | २४ |
| पदपंक्तिर्गायत्री | ५ | ५ | ५ | ५ | ६ | २६ |
| | ५ | ५ | ५ | ४ | ६ | २५ |
| उष्णिग्गर्भा गायत्री | ६ | ७ | ११ | | | २४ |
| पादनिवृ(चृ)द्गायत्री | ७ | ७ | ७ | | | २१ |
| अतिनिवृद्गायत्री | ७ | ६ | ७ | | | २० |
| यवमध्या गायत्री | ७ | १० | ७ | | | २४ |
| वर्धमाना गायत्री | ६ | ७ | ८ | | | २१ |
| प्रतिष्ठा गायत्री | ८ | ७ | ६ | | | २१ |
| ह्रसीयसी गायत्री | ६ | ६ | ७ | | | १९ |

## २ उष्णिक्

### ( सर्वानु. अ. ५ अनु. ३ )

| छन्दोनामानि | प्र.पा. | द्वि.पा. | तृ.पा. | च.पा. | अक्षरसंख्या |
|---|---|---|---|---|---|
| उष्णिक् | ८ | ८ | १२ | | २८ |
| पुर उष्णिक् | १२ | ८ | ८ | | २८ |
| ककुबुष्णिक् | ८ | १२ | ८ | | २८ |
| ककुम्न्यंकुशिरा उष्णिक् | ११ | १२ | ४ | | २७ |
| तनुशिरा उष्णिक् | ११ | ११ | ६ | | २८ |
| पिपीलिकमध्या उष्णिक् | ११ | ६ | ११ | | २८ |
| अनुष्टुब्गर्भा उष्णिक् | ५ | ८ | ८ | ८ | २९ |
| केवला उष्णिक् | ७ | ७ | ७ | ७ | २८ |

## ३ अनुष्टुप्

### ( सर्वानु. अ. ५ अनु. ४ )

| छन्दोनामानि | प्र.पा. | द्वि.पा. | तृ.पा. | च.पा. | पं.पा | ष.पा. | स. |
|---|---|---|---|---|---|---|---|
| अनुष्टुप् | ८ | ८ | ८ | ८ | | | ३२ |
| महापदपंक्तिरनुष्टुप् | ५ | ५ | ५ | ५ | ५ | ६ | ३१ |
| कृतिरनुष्टुप् | १२ | १२ | ८ | | | | ३२ |
| पिपीलिकमध्या नु० | १२ | ८ | १२ | | | | ३२ |
| काविराडनुष्टुप् | ९ | १२ | ९ | | | | ३० |
| नष्टरूपानुष्टुप् | ९ | १० | १३ | | | | ३२ |
| विराडनुष्टुप् | १०(११) | १० (११) | १०(११) | | | | ३०(३३) |

## ४ बृहती

### ( सर्वानु. अ. ५ अनु. ५ )

| छन्दोनामानि | प्र.पा. | द्वि.पा. | तृ.पा. | च.पा. | सं.सं. |
|---|---|---|---|---|---|
| बृहती | ८ | ८ | १२ | ८ | ३६ |
| पुरस्ताद्बृहती | १२ | ८ | ८ | ८ | ३६ |
| न्यंकुसारिणी बृहती, पुरोबृहती, स्कन्धोग्रीवी वा बृहती | ८ | १२ | ८ | ८ | ३६ |
| उपरिष्टाद्बृहती | ८ | ८ | ८ | १२ | ३६ |
| विष्टारबृहती | ८ | १० | १० | ८ | ३६ |
| ऊर्ध्वबृहती | १२ | १२ | १२ | | ३६ |
| पिपीलिकमध्या बृहती | १३ | ८ | १३ | | ३४ |
| विषमपदा बृहती | ९ | ८ | ११ | ८ | ३६ |
| केवला बृहती | ९ | ९ | ९ | ९ | ३६ |

## ५ पंक्तिः

### ( सर्वानु. अ. ५ अनु. ६ )

| छन्दोनामानि | प्र.पा. | द्वि.पा. | तृ.पा. | च.पा. | पं.पा. | सं.सं. |
|---|---|---|---|---|---|---|
| पंक्तिः | ८ | ८ | ८ | ८ | ८ | ४० |

| | | | | | |
|---|---|---|---|---|---|
| विराट्पंक्तिः | १० | १० | १० | १० | ४० |
| सतोबृहती पंक्तिः | १२ | ८ | १२ | ८ | ४० |
| विपरीता पंक्तिः | ८ | १२ | ८ | १२ | ४० |
| प्रस्तारपंक्तिः | १२ | १२ | ८ | ८ | ४० |
| आस्तारपंक्तिः | ८ | ८ | १२ | १२ | ४० |
| संस्तारपंक्तिः | १२ | ८ | ८ | १२ | ४० |
| विष्टारपंक्तिः | ८ | १२ | १२ | ८ | ४० |

## ६ त्रिष्टुप्

### ( सर्वानु. अ.५ अनु. ७ )

| छन्दोनामानि | प्र.पा | द्वि.पा | तृ.पा. | च.पा. | पं.पा. | सं.संख्या |
|---|---|---|---|---|---|---|
| त्रिष्टुप् | ११ | ११ | ११ | ११ | | ४४ |
| जगती त्रिष्टुप् | १२ | १२ | ११ | ११ | | ४६ |
| त्रिष्टुप् जगती | ११ | ११ | १२ | १२ | | ४६ |
| अभिसारिणी त्रिष्टुप् | १० | १० | १२ | १२ | | ४४ |
| विराट्स्थाना त्रिष्टुप् | ९ | ९ | १० | ११ | | ३९ |
| ,, ,, | १० | १० | ९ | ११ | | ४० |
| विराड्रूपा त्रिष्टुप् | ११ | ११ | ११ | ८ | | ४१ |
| ज्योतिष्मती त्रिष्टुप् | १२ | १२ | १२ | ८ | | ४४ |
| पुरस्ताज्ज्योतिस्त्रिष्टुप् | ८ | १२ | १२ | १२ | | ४४ |
| मध्येज्योतिस्त्रिष्टुप् | १२ | १२ | ८ | १२ | | ४४ |
| उपरिष्टाज्ज्योतिस्त्रिष्टुप् | १२ | १२ | १२ | ८ | | ४४ |
| महाबृहती त्रिष्टुप् | ८ | ८ | ८ | ८ | १२ | ४४ |
| यवमध्या त्रिष्टुप् | ८ | ८ | १२ | ८ | ८ | ४४ |
| पंक्त्युत्तरा त्रिष्टुप् | १० | १० | ८ | ८ | ८ | ४४ |
| विराट्पूर्वा वा त्रिष्टुप् | ,, | ,, | ,, | ,, | ,, | ,, |

## ७ जगती

### ( सर्वानु. अ. ५ अनु. ८ )

| छन्दोनामानि | प्र.पा. | द्वि.पा. | तृ.पा. | च.पा. | पं.पा. | ष.पा. | सं. सं. |
|---|---|---|---|---|---|---|---|
| जगती | १२ | १२ | १२ | १२ | | | ४८ |
| महासतोबृहती जगती | ८ | ८ | ८ | १२ | १२ | | ४८ |
| महापंक्तिर्जगती | ८ | ८ | ७ | ६ | १० | ९ | ४८ |
| ,, ,, | ८ | ८ | ८ | ८ | ८ | ८ | ४६ |

## द्विपाच्छन्दः ।

| सर्वाक्षर संख्या | प्रथम चरणे अक्षरसंख्या | द्वितीयचरणे अक्षरसंख्या | छंदो नामानि |
|---|---|---|---|
| ६ | १ | ५ | याजुषी गायत्री |
| ७ | २ | ५ | याजुषी उष्णिक् |
| ८ | ३ | ५ | याजुषी अनुष्टुप् |
| ९ | ४ | ५ | याजुषी बृहती |
| १० | ५ | ५ | याजुषी पंक्तिः |
| ११ | ६ | ५ | याजुषी त्रिष्टुप् |
| १२ | ७ | ५ | याजुषी जगती |
| ८ | १ | ७ | प्राजापत्या गायत्री |
| १२ | २ | १० | प्राजपत्योष्णिक् |
| १६ | ३ | १३ | प्राजापत्याऽनुष्टुप् |
| २० | ४ | १६ | प्राजापत्या बृहती |
| २४ | ५ | १९ | प्राजापत्या पंक्तिः |
| २८ | ६ | २२ | प्राजापत्या त्रिष्टुप् |
| ३२ | ७ | २५ | प्राजापत्या जगती |
| १५ | १ | १४ | आसुरी गायत्री |
| १४ | २ | १२ | आसुरी उष्णिक् |
| १३ | ३ | १० | आसुरी अनुष्टुप् |
| १२ | ४ | ८ | आसुरी बृहती |
| ११ | ५ | ६ | आसुरी पंक्तिः |
| १० | ६ | ४ | आसुरी त्रिष्टुप् |
| ९ | ७ | २ | आसुरी जगती |
| १२ | ६ | ६ | साम्नी गायत्री |
| १४ | ७ | ७ | साम्नी उष्णिक् |
| १६ | ८ | ८ | साम्नी अनुष्टुप् |
| १८ | ९ | ९ | साम्नी बृहती |
| २० | १० | १० | साम्नी पंक्तिः |
| २२ | ११ | ११ | साम्नी त्रिष्टुप् |
| २४ | १२ | १२ | साम्नी जगती |

## त्रिपाच्छन्दः ।

| सर्वाक्षराणि | प्रथम चरणे | द्वितीय चरणे | तृतीय चरणे | छंदो नामानि |
|---|---|---|---|---|
| २४ | १ | १५ | ८ | आर्षी गायत्री |
| २८ | २ | १४ | १२ | आर्षी उष्णिक् |
| ३२ | ३ | १३ | १६ | आर्षी अनुष्टुप् |
| ३६ | ४ | १२ | २० | आर्षी बृहती |
| ४० | ५ | ११ | २४ | आर्षी पंक्ति |
| ४४ | ६ | १० | २८ | आर्षी त्रिष्टुप् |
| ४८ | ७ | ९ | ३२ | आर्षी जगती |

| सर्वा क्षराणि | प्रथम चरणे | द्वितीय चरणे | तृतीय चरणे | छंदो नामानि |
|---|---|---|---|---|
| १८ | ६ | ६ | ६ | आर्ची गायत्री |
| २१ | ७ | ७ | ७ | आर्ची उष्णिक् |
| २४ | ८ | ८ | ८ | आर्ची अनुष्टुप |
| २७ | ९ | ९ | ९ | आर्ची बृहती |
| ३० | १० | १० | १० | आर्ची पंक्तिः |
| ३३ | ११ | ११ | ११ | आर्ची त्रिष्टुप् |
| ३६ | १२ | १२ | १२ | आर्ची जगती |
| ३६ | ६ | १२ | १८ | ब्राह्मी गायत्री |
| ४२ | ७ | १४ | २१ | ब्राह्मी उष्णिक् |
| ४८ | ८ | १६ | २४ | ब्राह्मी अनुष्टुप् |
| ५४ | ९ | १८ | २७ | ब्राह्मी बृहती |
| ६० | १० | २० | ३० | ब्राह्मी पंक्ति |
| ६६ | ११ | २२ | ३३ | ब्राह्मी त्रिष्टुप् |
| ७२ | १२ | २४ | ३६ | ब्राह्मी जगती |

## ( पिंगलसूत्रानुसारेण )

## छन्दसामक्षरसंख्या ।

| छन्दोनामानि | अक्षरसंख्या | |
|---|---|---|
| दैवी गायत्री | १ | |
| दैव्युष्णिक् | २ | |
| दैव्यनुष्टुप् | ३ | |
| दैवी बृहती | ४ | |
| दैवी पंक्तिः | ५ | |
| दैवी त्रिष्टुप् | ६ | वा याजुषी गायत्री |
| दैवी जगती | ७ | ,, याजुष्युष्णिक् |
| प्राजापत्या गायत्री | ८ | ,, याजुष्यनुष्टुप् |
| आसुरी जगती | ९ | ,, याजुषी बृहती |
| आसुरी त्रिष्टुप् | १० | ,, याजुषी पंक्तिः |
| आसुरी पंक्तिः | ११ | ,, याजुषी त्रिष्टुप् |
| आसुरी बृहती, | १२ | ,, याजुषी जगती, |
| प्राजापत्योष्णिक् | | ,, साम्नी गायत्री |
| आसुर्यनुष्टुप् | १३ | |
| आसुरी उष्णिक् | १४ | ,, साम्नी उष्णिक् |
| आसुरी गायत्री | १५ | |
| प्राजापत्या अनुष्टुप् | १६ | ,, साम्नी अनुष्टुप् |

| | | |
|---|---|---|
| आर्ची गायत्री | १८ | साम्नी बृहती |
| प्राजापत्या बृहती | २० | साम्नी पंक्तिः |
| आर्ची उष्णिक् | २१ | |
| साम्नी त्रिष्टुप् | २२ | |
| आर्षी गायत्री | २४ | प्राजापत्या पंक्तिः, साम्नी जगती, आर्ची अनुष्टुप् |
| आर्ची बृहती | २७ | |
| आर्षी उष्णिक् | २८ | प्राजापत्या त्रिष्टुप् |
| आर्ची पंक्तिः | ३० | |
| आर्षी अनुष्टुप् | ३२ | प्राजापत्या जगती |
| आर्ची त्रिष्टुप् | ३३ | |
| आर्षी बृहती | ३६ | आर्ची जगती, ब्राह्मी गायत्री |
| आषा पंक्तिः | ४० | |
| ब्राह्मी उष्णिक् | ४२ | |
| आर्षी त्रिष्टुप् | ४४ | |
| आर्षी जगती | ४८ | ब्राह्मी अनुष्टुप् |
| ब्राह्मी बृहती | ५४ | |
| ब्राह्मी पंक्तिः | ६० | |
| ब्राह्मी त्रिष्टुप् | ६६ | |
| ब्राह्मी जगती | ७२ | |

## ( पिंगल सूत्रानुसारेण । )

### गायत्र्यधिकारः

| | छन्दो नाम | प्रथम चरणे अ. संख्या | द्वितीय चरणे अ. संख्या | तृतीय चरणे अ. संख्या | चतुर्थ चरणे अ. संख्या | संपूर्ण अ. संख्या |
|---|---|---|---|---|---|---|
| १ | गायत्री त्रिपात् | ८ | ८ | ८ | ० | २४ |
| २ | गायत्री चतुष्पात् | ६ | ६ | ६ | ६ | २४ |
| ३ | पादनिवृत् गायत्री | ७ | ७ | ७ | ० | २१ |
| ४ | अतिपादनिवृत् गायत्री | ६ | ८ | ७ | ० | २१ |
| ५ | नागी गायत्री | ९ | ९ | ६ | ० | २४ |
| ६ | वाराही गायत्री | ६ | ९ | ९ | ० | २४ |
| ७ | वर्द्धमाना गायत्री | ६ | ७ | ८ | ० | २१ |
| ८ | प्रतिष्ठा गायत्री | ८ | ७ | ६ | ० | २१ |
| ९ | द्विपात् विराट् गायत्री | १२ | ८ | १२ | ८ | ४० |
| १० | त्रिपात् विराट् गायत्री | ११ | ११ | ११ | ० | ३३ |

### उष्णिगधिकारः

| | | प्र. पा. | द्विपा. | तृ. पा. | च. पा. | सं. सं. |
|---|---|---|---|---|---|---|
| ० | उष्णिक् | ८ | ८ | १२ | ० | २८ |
| | | १२ | ८ | ८ | ० | |
| १ | ककुप् उष्णिक् | ८ | १२ | ८ | ० | २८ |
| २ | पुर उष्णिक् | १२ | ८ | ८ | ० | २८ |
| ३ | परोष्णिक् | ८ | ८ | १२ | ० | २८ |
| ४ | चतुष्पात् उष्णिक् | ७ | ७ | ७ | ७ | २८ |

## अनुष्टुबधिकारः

| छन्दो नाम । | प्र. पा. | द्वि. पा. | तृ. पा. | च. पा. | सं. सं. |
|---|---|---|---|---|---|
| १ चतुष्पात् अनुष्टुभ् | ८ | ८ | ८ | ८ | ३२ |
| २ त्रिपात् अनुष्टुभ् (आदौ) | ८ | १२ | १२ | ० | ३२ |
| ३ त्रिपात् अनुष्टुभ् (मध्ये) | १२ | ८ | १२ | ० | ३२ |
| ४ त्रिपात् अनुष्टुभ् (अन्ते) | १२ | १२ | ८ | ० | ३२ |

## बृहत्यधिकारः

| | प्र. पा. | द्वि. पा. | तृ. पा. | च. पा. | सं. सं. |
|---|---|---|---|---|---|
| १ बृहती | १२ | ७ | ८ | ८ | ३६ |
| २ पथ्या बृहती | ८ | ८ | १२ | ८ | ३६ |
| ३ न्यंकुसारिणी (स्कन्धोग्रीवी, उरोबृहती इयमेव आचार्यमतेन ) | ८ | १२ | ८ | ८ | ३६ |
| ४ उपरिष्टात् बृहती | ८ | ८ | ८ | १२ | ३६ |
| ५ पुरस्तात् बृहती | १२ | ८ | ८ | ८ | ३६ |
| ६ 'क्वचित्' बृहती | ९ | ९ | ९ | ९ | ३६ |
| ७ बृहती | १० | १० | ८ | ८ | ३६ |
| ८ महाबृहती (सतोबृहती इयमेव आचार्यमतेन ) | १२ | १२ | १२ | ० | ३६ |

## पंक्त्यधिकारः

| छन्दो नाम | प्र. पा. | द्वि. पा. | तृ. पा. | च. पा. | पं. पा. | सं. सं. |
|---|---|---|---|---|---|---|
| १ सत्पङ्क्तिः (अनुलोमा | १२ | ८ | १२ | ८ | ० | ४० |
| विपरीता च ) | ८ | १२ | ८ | १२ | | |
| २ आस्तारपंक्तिः | ८ | ८ | १२ | १२ | ० | ४० |
| ३ प्रस्तारपंक्तिः | १२ | १२ | ८ | ८ | ० | ४० |
| ४ विष्टारपंक्तिः | ८ | १२ | १२ | ८ | ० | ४० |
| ५ संस्तारपंक्तिः | १२ | ८ | ८ | १२ | ० | ४० |
| ६ अक्षरपंक्तिः(अल्पशः) | ५ | ५ | ५ | ५ | ० | २० |
| ७ अल्पशः पंक्तिः | ५ | ५ | ० | ० | ० | १० |
| ८ पदपंक्तिः | ५ | ५ | ५ | ५ | ५ | २५ |
| ९ पंचपदापंक्तिः | ४ | ६ | ५ | ५ | ५ | २५ |
| १० पथ्यापंक्तिः | ८ | ८ | ८ | ८ | ८ | ४० |

## त्रिष्टुबधिकारः

| | प्र. पा. | द्वि. पा. | तृ. पा. | च. पा. | पं. पा. | सं. सं. |
|---|---|---|---|---|---|---|
| त्रिष्टुप् | ११ | ११ | ११ | ११ | ० | ४४ |
| ज्योतिष्मती त्रिष्टुप् | ८ | ११ | ८ | ८ | ८ | ४३ |
| पुरस्ताज्ज्योतिस्त्रिष्टुप् | ११ | ८ | ८ | ८ | ८ | ४३ |
| मध्येज्योतिस्त्रिष्टुप् | ८ | ८ | ११ | ८ | ८ | ४३ |
| उपरिष्टाज्ज्योतिस्त्रिष्टुप् | ८ | ८ | ८ | ८ | ११ | ४३ |

## जगत्यधिकारः

| छन्दोनाम | प्र. पा. | द्वि. पा. | तृ. पा. | च. पा. | पं. पा. | अ. सं. |
|---|---|---|---|---|---|---|
| ज्योतिष्मती जगती | ८ | १२ | ८ | ८ | ८ | ४४ |
| पुरस्ताज्ज्योतिर्जगती | १२ | ८ | ८ | ८ | ८ | ४४ |
| मध्येज्योतिर्जगती | ८ | ८ | १२ | ८ | ८ | ४४ |
| उपरिष्टाज्ज्योतिर्जगती | ८ | ८ | ८ | ८ | १२ | ४४ |
| जगती | १२ | १२ | १२ | १२ | ० | ४८ |
| शंकुमती गायत्री | ५ | ६ | ६ | ६ | (अत्र क्रमाभावः) | २३ |
| ककुम्मती गायत्री | ६ | ५ | ५ | ५ | (अत्र क्रमाभावः) | २१ |

## गायत्री ।

| | प्र. पा. | द्वि. पा. | तृ. पा. | | अ.संख्या |
|---|---|---|---|---|---|
| अणिष्ठमध्यासती | | | | | |
| पिपीलिकमध्या गायत्री | ८ | ३ | ८ | ० | १९ |
| पिपीलिकमध्या गायत्री | ८ | ४ | ८ | ० | २० |
| पिपीलिकमध्या गायत्री | ८ | ५ | ८ | ० | २१ |
| यवमध्या गायत्री | ७ | ८ | ७ | ० | २२ |
| यवमध्या गायत्री | ६ | ८ | ६ | ० | २० |
| यवमध्या गायत्री | ५ | ८ | ५ | ० | १८ |
| यवमध्या गायत्री | ४ | ८ | ४ | ० | १६ |
| यवमध्या गायत्री | ३ | ८ | ३ | ० | १४ |

## छन्दसामक्षरसंख्या ।

| छंदांसि | गा. | उ. | अ. | बृ. | पं. | त्रि. | ज. |
|---|---|---|---|---|---|---|---|
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

### चतुर्थोऽध्यायः ।

चतुःशतमुत्कृतिः ॥ १ ॥ चतुरश्चतुरस्त्यजेदुत्कृतेः ॥ २ ॥ तान्यभिसंख्या-प्रेभ्यः कृतिः ॥ ३ ॥ प्रकृत्या चोपसर्गवर्जिता॥ ४ ॥ धृत्यष्टिशक्करीजगत्यः ॥५॥ पृथक् पृथक् पूर्वत एतान्येवैषाम् ॥ ६ ॥ द्वितीयं द्वितीयमतितः॥ ७ ॥ अत्र लौकिकम् ॥ ८ ॥ आत्रैष्टुभाच्च यदार्षम् ॥ ९ ॥ पादश्चतुर्भागः ॥ १० ॥ यथावृत्तसमासिर्वा ॥ ११ ॥

( कात्यायनसर्वानुक्रमसूत्रानुसारेण )

## छंदसामक्षरसंख्या ।

| अक्षर संख्या | छंदोनामानि | अक्षर संख्या | छंदोनामानि | अक्षर- संख्या | छंदोनामानि |
|---|---|---|---|---|---|
| २२ | विराट् गायत्री | ५१ | निचृदतिजगती | ८० | कृतिः |
| २३ | निचृद्गायत्री | ५२ | अतिजगती | ८१ | भुरिक् कृतिः |
| २४ | गायत्री | ५३ | भुरिगतिजगती | ८२ | स्वराट् कृतिः+ विराट् प्रकृतिः |
| २५ | भुरिग्गायत्री | ५४ | स्वराडतिजगती+विराट् शक्वरी | ८३ | निचृत्प्रकृतिः |
| २६ | स्वराट् गायत्री+विराट् उष्णिक् | ५५ | निचृत् शक्वरी | ८४ | प्रकृतिः |
| २७ | निचृत् उष्णिक् | ५६ | शक्वरी | ८५ | भुरिक् प्रकृतिः |
| २८ | उष्णिक् | ५७ | भुरिक् शक्वरी | ८६ | स्वराट् प्रकृतिः+ विराडाकृतिः |
| २९ | भुरिगुष्णिक् | ५८ | स्वराट् शक्वरी+विराडतिशक्वरी | ८७ | निचृदाकृतिः |
| ३० | स्वराट् उष्णिक्+विराडनुष्टुप् | ५९ | निचृदतिशक्वरी | ८८ | आकृतिः |
| ३१ | निचृदनुष्टुप् | ६० | अतिशक्वरी | ८९ | भुरिगाकृतिः |
| ३२ | अनुष्टुप् | ६१ | भुरिगतिशक्वरी | ९० | स्वराडाकृतिः+ विराट् विकृतिः |
| ३३ | भुरिगनुष्टुप् | ६२ | स्वराडतिशक्वरी+ विराडष्टिः | ९१ | निचृद्विकृतिः |
| ३४ | स्वराडनुष्टुप्+विराड् बृहती | ६३ | निचृदष्टिः | ९२ | विकृतिः |
| ३५ | निचृद् बृहती | ६४ | अष्टिः | ९३ | भुरिग् विकृतिः |
| ३६ | बृहती | ६५ | भुरिगष्टिः | ९४ | स्वराट् विकृतिः+ विराट् संकृतिः |
| ३७ | भुरिग्बृहती | ६६ | स्वराडष्टिः+ विराडत्यष्टिः | ९५ | निचृत्संकृतिः |
| ३८ | स्वराट् बृहती+विराट् पंक्तिः | ६७ | निचृदत्यष्टिः | ९६ | संकृतिः |
| ३९ | निचृत् पंक्तिः | ६८ | अत्यष्टिः | ९७ | भुरिक् संकृतिः |
| ४० | पंक्तिः | ६९ | भुरिगत्यष्टिः | ९८ | स्वराट् संकृतिः+ विराडभिकृतिः |
| ४१ | भुरिक्पंक्तिः | ७० | स्वराडत्यष्टिः+ विराट् धृतिः | ९९ | निचृदभिकृतिः |
| ४२ | स्वराट् पंक्तिः+विराट् त्रिष्टुप् | ७१ | निचृद्धृतिः | १०० | अभिकृतिः |
| ४३ | निचृत् त्रिष्टुप् | ७२ | धृतिः | १०१ | भुरिगभिकृतिः |
| ४४ | त्रिष्टुप् | ७३ | भुरिग् धृतिः | १०२ | स्वराडभिकृतिः+विराडुत्कृतिः |
| ४५ | भुरिक् त्रिष्टुप् | ७४ | स्वराड् धृतिः+ विराडतिधृतिः | १०३ | निचृदुत्कृतिः |
| ४६ | स्वराट् त्रिष्टुप्+विराड् जगती | ७५ | निचृदतिधृतिः | १०४ | उत्कृतिः |
| ४७ | निचृज्जगती | ७६ | अतिधृतिः | १०५ | भुरिगुत्कृतिः |
| ४८ | जगती | ७७ | भुरिगतिधृतिः | १०६ | स्वराडुत्कृतिः |
| ४९ | भुरिग्जगती | ७८ | स्वराडतिधृतिः+ विराट्कृतिः | | |
| ५० | स्वराड् जगती+विराडतिजगती | ७९ | निचृत्कृतिः | | |

# सर्वानुक्रमसूत्रस्य विषयसूची ।

## ( १ ) सर्वानुक्रमसूत्रस्य अध्यायसूची ।



## ( २ ) सर्वानुक्रमसूत्रस्थयजुर्वेदाध्यायसूची ।

## (३) सर्वानुक्रमसूत्रस्थयजुर्वेदविषयानुक्रमणिका ।



## छन्दसां कोष्टकानि ।

## छन्दसामक्षरसंख्याकोष्टकानि ।